॥ श्रीः ॥

श्रीमन्महाकविकालिदासप्रणीतः

# श्रुतबोधः ।



श्रीयुतनारायणपण्डितेन प्रणीतया
संस्कृतटीकया सन्दर्भितः



मुरादाबादनिवासिना
**व्रजरत्नभट्टाचार्येण**
प्रणीतया रत्नप्रभाख्यया हिन्दीव्याख्यया
समलङ्कृतश्च ।

---

( सप्तमावृत्तिः )

---

मुम्बय्यां
पाण्डुरङ्ग जावजी इत्येतैः
स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितः ।

---

शकाब्दाः १८६१, सनाब्दाः १९३९.

---

मूल्यं ३ आणकाः ।

॥ श्रीः ॥

## समर्पणम् ।

स्वर्गसुखप्राप्तेभ्यो मृत्योः प्रागसामान्यपाण्डित्याभिमानिभ्यः
श्रीमज्ज्योतिर्विद् ज्वालानाथपण्डितेभ्य इयं रत्न-
प्रभारूपकुसुमाञ्जलिः सबहुमानपुरःसरं
समर्पितास्ति—

तेषामौरसपुत्रेण
**व्रजरत्नभट्टाचार्येण**
[ टीकाकारेण ]

॥ श्रीः ॥

# श्रुतबोधे प्रश्नाः ।

A. मणिबन्धस्यान्ते एकगुरुयोजने किं छन्दो भवति ? ।

B. आद्यास्त्रयः अष्टमः दशमः द्वादशत्रयोदशौ च यस्मिन् वृत्ते गुरवः तस्य किं नाम ? ।

C. श्रुतबोध इति नामान्वर्थं अनन्वर्थं वा ? । अन्वर्थं चेत् कथम् ? "पादान्तस्थं विकल्पेन" इत्येतत् साध्याहारं व्याख्यायतामुदाह्रियतां च ।

D. लक्ष्यन्तामुदाह्रियन्तां चाधोविन्यस्तछन्दांसि:—शालिनी, मन्दाक्रान्ता, शिखरिणी, स्रग्धरा, उपेन्द्रवज्रा चेति ।

E. पृथ्वीहरिण्योः कस्मिन् विषये भेदः ? कस्मिंश्चाभेदः ?, सलक्षणमुत्तरणीयम् ।

F. "स स्यादम्बुमदम्बुदालिगलरुग्देवो मुदे वो मृडः"

"कनककुण्डलमण्डितगण्डया
जघनदेशनिवेशितवीणया ।
अमरराजपुरे सुरकन्यया
तव यशो विमलं परिगीयते ॥ १ ॥"

"द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ।
तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥"

"कथमयमपि कालश्चारुचन्द्रावतंसः" एषु कानि छन्दांसि ? ।

व्रजरत्नभट्टाचार्यः,
पट्टवरगंज,
मुरादाबाद.



# भूमिका ।

"नागर नन्दकिशोर, मुरलीअधरन मधुरछवि ।
चाहत चित्तचकोर, कृष्णचन्द्रमुखचंद्रको" ॥ १ ॥

प्रिय वाचकवर्ग !

यह छन्दःशास्त्रभी वेदका अङ्ग[1] है, परन्तु छन्द दो प्रकारके होते हैं एक वैदिक, दूसरे लौकिक. वैदिक छन्दोंका ग्रन्थ शेषकृत पिङ्गल इस समय दुष्प्राप्य है. और लौकिक छन्दोंके दो ग्रन्थ इस समय प्रसिद्ध हैं, एक तौ श्रीकालिदासकृत 'श्रुतबोध', दूसरा श्रीकेदारभट्टप्रणीत 'वृत्तरत्नाकर'. इनमेंभी 'वृत्तरत्नाकर' 'श्रुतबोध' की अपेक्षा कठिन और न्यून प्रचार है. यह 'श्रुतबोध' बनारस कालिजकी प्रथम परीक्षा आदि औरभी परीक्षाओंमें नियत है. प्रियवर ! लीजिये आज उस ( श्रुतबोध ) की भी भाषाटीका आपकी भेट है, ग्रन्थकारने इसमें प्रसिद्ध २ चालीस छन्दोंके लक्षण लिखे ह, विशेष

१ शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः । ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु ॥ १ ॥

चातुर्य इसमें यह है कि—जिस छन्दका लक्षण लिखा है वोह लक्षण उसी छन्दोबद्ध श्लोकमें लिखा है ॥

यद्यपि 'कालिदास' नामके अनेक कविवर हुए हैं तथापि उनमेंसे यह परिचय देकर इस लघु ग्रन्थको गौरव नहीं देता है की कौनसे कालिंदासका निर्मित यह अनुपम ग्रन्थ है।

परीक्ष्य विद्यार्थियोंको इस ग्रन्थसे बहुत कार्य पडता है, अतएव उनके उपकारार्थ मैनें इसके ऊपर 'रत्नप्रभा' नामक भाषाटीका बनायी है. यदि इसके पढनेसे छात्रवर्गको कुछभी लाभ पहुंचेगा तो परिश्रम सफल माना जायगा।

२ वैशाख कृष्ण १९५२, गुरुवार.

व्रजरत्नभट्टाचार्यः
मोहल्ला—पट्टुवरगंज,
मुरादाबाद.

१ बहुत सुप्रसिद्ध महापण्डित महाशयोंका यह कथन है कि–रघुवंशके कर्ता कालिदासका यह ग्रन्थ नहीं है, उनके 'रघुवंश–शाकुन्तल–विक्रमोर्वशी' निर्मित यह तीनही ग्रन्थ विदित होते हैं, कारण कि औरोंकी रचना भिन्न २ ज्ञात होती है यदि येही कथन प्रमाण माना जाय तब तौ 'विक्रमोर्वशीय' भी उक्त कालिदासका निर्मित नहीं जाना जाता क्योंकी उसमें दो–तीन स्थानोंमें स्वयं कालिदासने नाम लिखा है 'शकुन्तला' के निर्माता कालिदासको यह प्रणाली नही कि–वोह स्वयं नाम लिखें, जो हो सो हो इस विवादसे यहां कोई लाभ नहीं ॥

॥ श्रीः ॥

# श्रुतबोधः सटीकः

## रत्नप्रभाख्यभाषाटीकासंवलितश्च ।

ग्रन्थप्रतिज्ञा ।

**छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते ॥**
**तमहं संप्रवक्ष्यामि श्रुतबोधमविस्तरम् ॥ १ ॥**

श्रीमत्सारस्वतं धाम नत्वा स्तुत्वा च सद्गुरुम् ।
टीका श्रीश्रुतबोधस्य छन्दसः क्रियते मया ॥

छन्दसामिति ॥ अहं तं श्रुतबोधं नाम छन्दःशास्त्रं संप्रवक्ष्यामि । कीदृशं तत् । अविस्तरं न विद्यते विस्तरो यस्मिन् सोऽविस्तरस्तदविस्तरम् । येन श्रुतमात्रेण प्रस्तारादिविनैव छन्दसामार्यानुष्टुबादीनां लक्षणं गुरुलघुवर्णमात्रागणादिस्वरूपं बुध्यते ज्ञायत इत्यन्वयः ॥ १ ॥

"करहु कृपाकी कोर, कालीमर्दन नन्दसुत ।
चित बहु हमरीओर, कंसनिकन्दन ब्रजरतन ॥ १ ॥"

जिसके श्रवणमात्रहीसे कतिपय छन्दोंके लक्षण विदित हो जाते हैं, तिस स्वल्पविस्तारवाले श्रुतबोधनामक ग्रन्थको मैं वर्णन करूं गा १

परिभाषा ।

**संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् ।**
**विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ २ ॥**

अथ छन्दोलक्षणस्य लघुगुरुज्ञानमन्तरेण दुर्विज्ञेयत्वाल्लघुगुरुलक्षणमाह । संयुक्ताद्यमिति । एतादृशमक्षरं गुरु ज्ञेयम् । कीदृशमक्षरम् । संयुक्ताद्यं संयुक्तस्य संयोगीभूत-

स्याद्यमादिभवम् । पुनः कीदृशम् । दीर्घं द्विमात्रकम् । सानुस्वारमनुस्वारेण सह वर्तमानम् । पुनः विसर्गसंमिश्रं विसर्गेण संमिश्रं विसर्गसहितम् । पादान्तस्थमक्षरं विकल्पेन गुरु लघु विज्ञेयम् । पादान्ते गुरुरपि लघुः स्यात्कुत्रचिल्लघुरपि गुरुः स्यात् । तथा चोक्तं ग्रन्थान्तरे—'वा पादान्ते त्वसौ वक्रो ज्ञेयोऽन्यो मात्रको लघुः' ॥ २ ॥

संभोगी वर्णसे प्रथम रहनेवाला अक्षर और दीर्घ ( द्विमात्रिक ) तथा अनुस्वारसहित और विसर्गसमन्वित अक्षर दीर्घ होता है और श्लोकके चरणान्तके अक्षरको विकल्पसे दीर्घ[1] जानना चाहिये ॥ २ ॥

गणलक्षणम् ।

[2]आदिमध्यावसानेषु भजसा यान्ति गौरवम् ।
यरता लाघवं यान्ति मनौ तु गुरुलाघवम् ॥ ३ ॥

श्लोकादौ कस्मिंश्चिद्गणे पतिते शुभं कस्मिंश्चिद्गणे पतिते चाशुभं भवतीत्यष्टगणानां लक्षणमाह । आदिमध्यावसानेष्विति । भजसाः भगण-जगण-सगणाः आदिमध्यावसानेषु गौरवं गुरुतां यान्ति, आदिश्च मध्यं च अवसानं च तानि तेषु । तथाहि—आदिगुरुर्भगणः, मध्यगुरुर्जगणः, अन्त्यगुरुः सगणः । यरताः यगण-रगण-तगणाः आदिमध्यावसानेषु लाघवं लघुतां यान्ति । तथापि आदिलघुर्य-

१. पादके अन्तका अक्षर दीर्घ हो वा ह्रस्व हो परन्तु–वोह विकल्पसे दीर्घ माना जाताहै । यह क्रम द्वितीय और चतुर्थ पादमें होता है, और प्रथम तथा तृतीयपादमें तो 'वसन्ततिलका' आदिहीमें होता है ॥

२. एतच्छ्लोकस्थाने "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् ॥ ३ ॥"
अयं श्लोकः क्वचिदुपलभ्यते ।

गणः । मध्यलघू रगणः । अन्त्यलघुस्तगणस्तु पुनः मनौ मगण-नगणौ आदिमध्यावसानेषु गुरुलाघवं गुरुतां लघुतां च यातः । तथा च सर्वगुरुर्मगणः, सर्वलघुर्नगणः भवतीति । एतेषां देवताः फलानि च ग्रन्थान्तरे—'मो भूमिः श्रियमातनोति य जलं वृद्धिं र वह्निर्मृतिं, सो वायुः परदेशदूरगमनं त व्योम शून्यं फलम् ॥ जः सूर्यो भयमादधाति विपुलं भेन्दुर्यशो निर्मलं, नो नाकश्च सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः' ॥ ३ ॥

भगण जगण और सगण क्रमसे आदि मध्य और अन्तमें गुरु [ दीर्घ ] होते हैं, और यगण रगण और तगण क्रमसे आदि मध्य और अन्तमें लघु [ ह्रस्व ] होते हैं, तथा मगण और नगण यथाक्रमसे गुरु और लघु होते हैं; अर्थात्—जिसके आदिमें गुरुवर्ण हो सो भगण, जिसके मध्यमें गुरुवर्ण हो सो जगण, और जिसके अन्तमें गुरुवर्ण हो सो सगण कहाता है । और जिसके आदिमें लघुवर्ण हो सो यगण, जिसके मध्यमें लघु हो सो रगण, और जिसके अन्तमें लघु हो सो तगण कहता हैं, और मगणमें तीनों ( आदि–मध्य–अन्त्य ) वर्ण गुरु होते हैं, तथा नगणमें तीनों वर्ण लघु होते हैं ॥ ४ ॥

आर्याछन्दः ।

**यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।**
**अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥ ४ ॥**

यस्याः प्रथम इति ॥ सा आर्या भवति । सा का । यस्याः प्रथमे पादे द्वादश मात्राः स्युः । तृतीये तथा द्वादश मात्रा भवन्ति । द्वितीयेऽष्टादश मात्रा भवन्ति । चतुर्थके पञ्चदश मात्रा भवन्ति । सा आर्या ॥ ४ ॥ आर्याचरणेषु क्रमान्मात्राः—१२, १८, १२, १५ ॥

जिसके प्रथम और तृतीय चरण बारह २ तथा द्वितीय चरणमें अठारह और चतुर्थ चरणमें पन्द्रह मात्रा[1] हों वोह आर्या छन्द कहाता है ॥ ४ ॥

गीतिः (आर्या) ।

**आर्यापूर्वार्धसमं द्वितीयमपि भवति यत्र हंसगते! ।**
**छन्दोविदस्तदानीं गीतिंताममृतवाणि! भाषन्ते ५**

आर्यापूर्वार्धसममिति। हे अमृतवाणि! छन्दोविदस्तदानीं तां गीतिं भाषन्ते ब्रुवते । हे हंसगते ! यत्रार्यापूर्वार्धसमं द्वितीयमपि उत्तरार्धमपि भवति । पूर्वार्धस्य प्रथमे द्वादश मात्राः, द्वितीयेऽष्टादश, तृतीये द्वादश, चतुर्थकेऽष्टादश, संकलनया षष्टिमात्रा इत्यर्थः । अमृतमिव वाणी वाक् यस्याः साऽमृतवाणी तस्याः संबुद्धिः। छन्दांसि विदन्ति जानन्तीति छन्दोविदः शास्त्रज्ञा इत्यर्थः । हंसस्य गतिर्गमनमिव गमनं यस्याः सा हंसगता तस्याः संबुद्धौ हे हंसगते इत्यर्थः ॥५॥ गीतिचरणेषु क्रमान्मात्राः—१२, १८, १२, १८ ॥

हे हंसकी सदृश गतिवाली प्रिये ! जिसका पूर्वार्ध और उत्तरार्ध आर्या छन्दके पूर्वार्धकी समान हो हे मधुरभाषिणि ! तिसको छन्दःशास्त्रज्ञ पण्डित गीति छन्द कहते हैं, अर्थात्—जिसके प्रथम चरणमें बारह और द्वितीयमें अठारह तथा तृतीयमें बारह और चतुर्थमें अठारह मात्रा हों सो गीति छन्द कहता है ॥ ५ ॥

उपगीतिः (आर्या) ।

**आर्योत्तरार्धतुल्यं प्रथमार्धमपि प्रयुक्तं चेत् ।**
**कामिनि! तामुपगीतिं प्रकाशयन्ते महाकवयः ॥६॥**

आर्योत्तरार्धतुल्यमिति ॥ हे कामिनि ! महाकवयस्तामपि

---

१. एक ह्रस्व अक्षरकी एकही मात्रा होती है ॥

गीतिं प्रकाशयन्ते । उपगीतिसंज्ञकां प्रकटीकुर्वते इत्यर्थः । यदि आर्योत्तरार्धतुल्यं प्रथमार्धमपि प्रयुक्तं चेत्प्रयोगीकृतं भवति । उत्तरार्धेन द्वादशमात्रिकेण तुल्यं समानं भवति । प्रथमे द्वादश मात्रा, द्वितीये पञ्चदश, तृतीये द्वादश, चतुर्थे पञ्चदश, संकलनया ५४ चतुष्पञ्चाशन्मात्रेत्यर्थः । कामो विद्यते यस्याः सा कामिनी तस्याः संबुद्धौ । महान्तश्च ते कवयश्चेति कर्मधारयः । तथा चोक्तं ग्रन्थान्तरे—"आर्या-द्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ॥ यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते" ॥ ६ ॥ उपगीतिः चरणेषु क्रमान्मात्राः १२, १५, १२, १५ ॥

हे कामिनि ! जिसका प्रथमार्धभी आर्या छन्दके उत्तरार्धकी तुल्य प्रयोग किया जाय उस छन्दको बडे बडे कवीश्वर उपगीति छन्द कहते हैं, अर्थात्-जिसके प्रथम चरणमें बारह और द्विती-यमें पन्दरह तथा तृतीयमें बारह और चतुर्थमें पन्दरह मात्रा हों वोह उपगीति छन्द कहाता है ॥ ६ ॥

### अक्षरपङ्क्तिछन्दः ।

**आद्यचतुर्थं पञ्चमकं चेत् ।**
**यत्र गुरु स्यात्साऽक्षरपङ्क्तिः ॥ ७ ॥**

आद्यचतुर्थमिति ॥ यत्र यस्यां वृत्तौ आद्यं प्रथमं चतुर्थं पञ्चमकं गुरु स्यात्साऽक्षरपङ्क्तिः ज्ञेया । अक्षरशब्दः पाद-पूरणार्थः, छन्दस्तु पङ्क्तिः 'प्रतिचरणे इदं लक्षणम्' । तथा चोक्तं रत्नाकरे—"भोगाविति पङ्क्तिः" ॥ ७ ॥ अक्षरपङ्क्तिः चरणाक्षराणि ५ ग० भ, गु, गु ॥

जिस छन्दमें प्रथम चतुर्थ और पंचम वर्ण गुरु [ दीर्घ ] हो उसे अक्षरपंक्ति ( पंक्ति ) छन्द कहते हैं ॥ ७ ॥

शशिवदनाछन्दः ।

**अगुरु चतुष्कं भवति गुरू द्वौ ।**
**घनकुचयुग्मे ! शशिवदनासौ ॥ ८ ॥**

अगुर्विति । हे घनकुचयुग्मे ! यत्राद्यं चतुष्कं वर्णचतुष्टयं अगुरु स्याच्चत्वारो वर्णा लघवः सन्ति ततो द्वौ पञ्चमषष्ठौ गुरू दीर्घौ भवतस्तदा शशिवदना चरणचतुष्टयेष्विदं लक्षणं असाविति संबन्धः । घनं कठिनं कुचयुग्मं यस्याः सा घनकुचयुग्मा तस्याः संबुद्धौ । तथा चोक्तं रत्नाकरे—"शशिवदना न्यौ" ॥८॥ शशिवदना । चरणाक्ष० ६, ग० न, य ॥

हे सघनउरोजवति ! जिसमें पहिले चार अक्षर लघु और तदनन्तर पांचवें और छठे यह दो अक्षर दीर्घ हो उसको शशिवदना छन्द कहते हैं ॥ ८ ॥

मदलेखाछन्दः ।

**तुर्यं पञ्चमकं चेद्यत्र स्याल्लघु बाले ! ।**
**विद्वद्भिर्मृगनेत्रे ! प्रोक्ता सा मदलेखा ॥ ९ ॥**

सप्ताक्षरजातौ मदलेखालक्षणमाह—तुर्यमिति ॥ हे मृगनेत्रे ! यदि तुर्यं चतुर्थं पञ्चमकं पञ्चमं लघु स्यात् हे बाले नवयौवने ! विद्वद्भिः पण्डितैः सा मदलेखा प्रोक्ता । मृगस्य नेत्रे इव नेत्रे यस्याः सा मृगनेत्रा तस्याः संबुद्धौ । उक्तं रत्नाकरे—"मसौ गः स्यान्मदलेखा" ॥ ९ ॥ मदलेखा । चरणाक्ष० ७ ग० म, स, ग ॥

हे मृगनयने ! तरुणि ! यदि चतुर्थ और पञ्चमवर्ण लघु हों तौ विद्वानोंद्वारा मदलेखा छन्द कहाजाता है ॥ ९ ॥

अष्टाक्षरजाति ( अनुष्टुबादि ) छन्दः ।

**श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।**
**द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ १० ॥**

अष्टाक्षरजातौ पद्यलक्षणमाह—श्लोक इति ॥ अन्ययोः प्रथमतृतीयपादयोः सप्तममक्षरं गुरु द्विमात्रकं भवति । सर्वत्र चतुर्ष्वपि चरणेषु पञ्चममक्षरं लघु स्यात् । षष्ठं गुरु स्यात् । द्विचतुष्पादयोर्द्वितीयचतुर्थचरणयोः सप्तममक्षरं ह्रस्वं ज्ञेयम् ॥ ईदृग्विधे श्लोके पद्येऽनुष्टुबादयो भवन्ति ॥१०॥

जिसके अन्य ( प्रथम—तृतीय ) चरणमें सप्तम वर्ण गुरु हो, और चारों चरणोंमें छठा अक्षर गुरु तथा पांचवा लघु हो और द्वितीय तथा चतुर्थ चरणमें सप्तम वर्ण लघु हो उसे श्लोक ( अनुष्टुप् ) आदिक जानना ॥ १० ॥

पद्यछन्दोलक्षणम् ।

**पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः ।**
**षष्ठं गुरु विजानीयादेतत्पद्यस्य लक्षणम् ॥ ११ ॥**

अथ पद्यलक्षणमाह—पञ्चममिति ॥ एतत्पद्यस्य लक्षणं विजानीयात् । यत्र सर्वत्र चरणेषु पञ्चमं लघु भवति । द्विचतुर्थचरणयोः द्वितीयचतुर्थचरणयोः सप्तममक्षरं लघु भवति । सर्वत्र चरणेषु षष्ठं अक्षरं गुरु भवति ॥ ११ ॥ पद्यं । चरणाक्ष० ८, गणनियमो नास्ति ॥

जिसके चारों चरणोंमें पञ्चम वर्ण तौ ( ह्रस्व ) हो और दूसरे तथा चौथे चरणमें सातमा अक्षर लघु ( ह्रस्व ) हो, और चारों पादोंमें छठा अक्षर गुरु हो उसे पद्य जानना चाहिये ॥ ११ ॥

माणवकं छन्दः ।

**आदिगतं तुर्यगतं पञ्चमकं चान्त्यगतम् ।**
**स्याद्गुरु चेत्तत्कथितं माणवकाक्रीडमिदम् ॥ १२ ॥**

माणवकाक्रीडलक्षणमाह—आदिगतमिति ॥ तदिदं माणवकाक्रीडं कथितं कविभिरित्यध्याहार्यम् । आदिगतं प्रथमं तुर्यगतं चतुर्थं पञ्चमकं पञ्चमं अन्त्यगतं अन्त्यस्थितमष्टमं गुरु स्यात्तदिदं माणवकाक्रीडं बुधा वदन्ति । तथा चोक्तं रत्नाकरे—"माणवकं भस्तलगः" ॥ १२ ॥

माणवकं । चरणाक्ष० ८ ग० भ, त, ल, ग ॥

जिसमें प्रथम चतुर्थ और पंचम तथा अन्त्य (अष्टम) अक्षर गुरु हो उसको माणवकाक्रीड छन्द कहते हैं ॥ १२ ॥

प्रमाणिका, नगस्वरूपिणी ।

**द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा ।**
**तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥१३॥**

अथ नगस्वरूपिणीलक्षणमाह—द्वितुर्येति ॥ बुधाः पण्डिताः तदानीं नगस्वरूपिणीं निवेदयन्ति । तदा कदा । यदा द्वितीयं तुर्यं चतुर्थं षष्ठं अष्टमं चाक्षरं गुरु प्रयोजितं गुरुसंज्ञकं भवति, एतादृशीं तां नगस्वरूपिणीं निवेदयन्ति । तथा चोक्तं रत्नाकरे—"प्रमाणिका जरौ लगौ" ॥ १३ ॥

प्रमाणिका, नगस्वरूपिणीति वा । च० अ० ८, ग० ज, र, ल, ग ॥

जब द्वितीय चतुर्थ छठा और आठवा अक्षर गुरु प्रयोग किया जाता है, तब उसको पण्डित महाशय नगस्वरूपिणी कहते हैं॥१३॥

विद्युन्मालाछन्दः ।

**सर्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः ।**
**विद्वद्वृन्दैर्वीणावाणि! व्याख्याता सा विद्युन्माला॥१४॥**

अथ विद्युन्मालालक्षणमाह—सर्वे वर्णा इति । हे वीणावाणि ! विद्वद्वृन्दैः पण्डितसमूहैः सा विद्युन्माला व्याख्याता,

वीणायाः वाणीव वाणी यस्याः सा वीणावाणी तस्याः संबुद्धौ । विदुषां पण्डितानां वृन्दानि समूहास्तैः । सा का । यस्यां सर्वे वर्णा दीर्घाः गुरुभूता भवन्ति, वेदैर्वेदैश्चतुर्भिश्चतुर्भिर्विश्रामो भवतीति सा विद्युन्माला । तथा चोक्तं रत्नाकरे—"मो मो गो गो विद्युन्माला" ॥ १४ ॥ विद्युन्माला । च० अ० ८, ग० म, म; ग, ग, यतिः ४, ४, ॥

जिसमें सबही वर्ण दीर्घ हों और चार चार अक्षरोंके ऊपर विराम ( स्थिति ) हो, हे मृदुभाषिणि ! पण्डितसमाजोंने उसको विद्युन्मालानामसे व्याख्यान किया है ॥ १४ ॥

चम्पकमालाछन्दः ।

**तन्वि ! गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम् ।**
**इन्द्रियबाणैर्यत्र विरामः सा कथनीया चम्पकमाला १५**

अथ दशाक्षरजातौ चम्पकमालालक्षणमाह—तन्वीति ॥ हे तन्वि तन्वङ्गि ! सा चम्पकमाला कथनीया । सा का । यत्र यस्यां आद्यचतुर्थं प्रथमं चतुर्थं पञ्चमषष्ठं अन्त्यं दशमं उपान्त्यं नवमं एते गुरुवो भवन्ति । यत्र इन्द्रियबाणैः पञ्चभिः पञ्चभिरक्षरैर्विरामो विश्रामः । सा चम्पकमाला कथनीया । आद्यचतुर्थं पञ्चमषष्ठं इत्येकत्वे द्विगुद्वन्द्वौ । इन्द्रियाणि च बाणाश्च इन्द्रियबाणास्तैः । तथा चोक्तं रत्नाकरे—"चम्पकमाला चेद्भमसागः" ॥१५॥ चम्पकमाला । चरणाक्ष० १०, ग० भ, म, स, ग; यतिः ५, ५ ॥

हे तन्वङ्गि ! जिसमें प्रथम और चतुर्थ पञ्चम और षष्ठ तथा उपान्त्य ( नवम ) अक्षर गुरु हो और पांच पांच वर्णोंपर जिसमें विराम हो उसको चम्पकमाला कहना चाहिये ॥ १५ ॥

मणिबन्धछन्दः ।

चम्पकमाला यत्र भवेदन्त्यविहीना प्रेमनिधे ! ।
छन्दसि दक्षा ये कवयस्तन्मणिबन्धं ते ब्रुवते ॥ १६ ॥

अथ नवाक्षरजातौ मणिबन्धनलक्षणमाह—चम्पकमालेति ॥ हे प्रेमनिधे ! छन्दसि छन्दोग्रन्थे ये दक्षाः कुशलास्ते कवयस्तन्मणिबन्धसंज्ञकं ब्रुवते । यत्रान्त्यविहीना चम्पकमाला भवेत् । चम्पकमाला तु दशाक्षरा । इदं नवाक्षरं भवेत् । लक्षणं तु तदेव चम्पकमालागतमेव तन्मणिबन्धम् । प्रेम्णः निधिरिव निधिः तस्याः संबुद्धौ । अन्त्यविहीनः अन्ते भवोऽन्त्यो वर्णः तेन विहीना त्यक्ता भवेत्। तदुक्तं रत्नाकरे—"म्भौ सयुक्तौ रुक्मवती"॥१६॥

मणिबन्धम् ॥ च० अ० ९, ग० भ, म, स; यतिः ५।४

हे प्रिये ! जिसमें अन्त्यवर्णरहित चम्पकमालाका लक्षण हो उसको छन्दःशास्त्रमें निपुणजन मणिबंधसंज्ञक छन्द कहते हैं ॥ १६ ॥

शालिनीछन्दः ।

ह्रस्वो वर्णो जायते यत्र षष्ठः
कम्बुग्रीवे ! तद्वदेवाष्टमान्त्यः ।
विश्रामः स्यात्तन्वि वेदैस्तुरङ्गै-
स्तां भाषन्ते शालिनीं छान्दसीयाः ॥ १७ ॥

एकादशाक्षरजातौ शालिनीमाह—ह्रस्व इति ॥ हे तन्वि कृशाङ्गि छान्दसीयाः छन्दसि कुशलास्तां शालिनीं भाषन्ते । तां कां । हे कम्बुग्रीवे ! यत्र यस्यां षष्ठो वर्णो ह्रस्वः तद्वदष्टमान्त्यः नवमः ह्रस्वो जायते । यत्र वेदैश्चतुर्भिस्तुरङ्गैः सप्त-

भिर्विश्रामस्तां शालिनीं भाषन्ते ब्रुवते । कम्बोः शङ्खस्य ग्रीवावद्ग्रीवा यस्याः सा तत्संबुद्धौ । 'कम्बुग्रीवा त्रिरेखा स्यात्' इत्यमरः । तदुक्तं रत्नाकरे—"शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" ॥ १७ ॥ शालिनी । चर० अ० ११ ग० म, त, त, ग, ग; यतिः ४, ७ ॥

हे सूक्ष्माङ्गि ! जिसमें छठा अष्टमान्त्य ( नवम ) अक्षर ह्रस्व हो, तथा हे मंजुकण्ठि ! चार और सात अक्षरोंके ऊपर विराम हो उसको पण्डितजन शालिनी छन्द कहते हैं ॥ १७ ॥

मन्दाक्रान्ताछन्दः ।

**चत्वारः प्राक्सुतनु ! गुरवो द्वादशैकादशौ चे-**
**न्मुग्धे ! वर्णौ तदनु कुमुदामोदिनि ! द्वादशान्त्यौ ॥**
**तद्वच्चान्त्यौ युगरसहयैर्यत्र कान्ते विरामो**
**मन्दाक्रान्तां प्रवरकवयस्तन्वि ! तां संगिरन्ते ॥१८॥**

चत्वार इति ॥ हे सुतनु सुष्ठु तनुः कायो यस्याः सा तस्याः संबोधनं हे सुतनु ! प्रवरकवयः श्रेष्ठकवयः तां मन्दाक्रान्तां वदन्ति । तां काम् । चेद्यदि यत्र यस्यां प्रागादौ चत्वारो वर्णा गुरवो भवन्ति । हे मुग्धे ! च पुनः द्वादशैकादशौ वर्णौ गुरू भवतः । हे कुमुदामोदिनि ! च पुनः तदनु द्वादशान्त्यौ त्रयोदशचतुर्दशौ वर्णौ गुरू भवतः । च पुनः अन्त्यौ तद्वद्भवतः हे कान्ते ! च पुनः युगरसहयैश्चतुःषट्सप्तभिः क्रमेण विरामो भवति । प्रवरकवयस्तद्विदः ॥ १८ ॥ मन्दाक्रान्ता । च० अ० १७, ग० म, भ, न, त, त; ग, ग; यतिः ४, ६, ७ ॥

हे सुभगे ! जिसमें पहिले चार अक्षर गुरु हों, तदनन्तर हे मुग्धे ! बारहवें और ग्यारहवें दो अक्षर गुरु हों पुनः हे कुमु-

दवासिनि ! तेरहवां और चौदहवां यह दो अक्षर गुरु हों, तथा हे कान्ता ! अन्त्यके दो अक्षर भी गुरु हों, और चार-छै तथा सात सात वर्णोंके ऊपर विराम हो, हे तन्वङ्गि ! श्रेष्ठ कवीश्वर उसे मन्दाक्रान्ता कहते हैं ॥ १८ ॥

हंसीछन्दः ।

**मन्दाक्रान्तान्त्ययतिरहिता सालङ्कारे ! भवति यदि सा ।**
**तद्विद्वद्भिर्ध्रुवमभिहिता ज्ञेया हंसी कमलवदने ! ॥ १९ ॥**

हंस्या लक्षणमाह—मन्दाक्रान्तेति ॥ हे कमलवदने ! तत्तदा ध्रुवं निश्चयेन हंसी ज्ञेया ज्ञातव्या। कमलवत्सौन्दर्य सौरभादिगुणैः कमलसदृशं वदनं मुखं यस्याः सा तत्संबोधनम्। कथंभूता हंसी। विद्वद्भिः पण्डितैरभिहिता कथिता। तदा कदा। हे सालङ्कारे ! यदि मन्दाक्रान्ता अन्त्ययतिरहिता अन्ते भवा अन्त्या मन्दाक्रान्तायां युगरसहयैः विश्रामः सान्त्यरहिता दशवर्णात्मिका सा हंसी ज्ञेया। लक्षणं मन्दाक्रान्ताया एव। अलङ्कारेण आभूषणेन सह वर्तमाना सालङ्कारा तस्याः संबोधनं हे सालङ्कारे ! ॥ १९ ॥ हंसी। च० अ० १०, ग० म, भ, न, ग; यतिः ४, ६ ॥

हे अलङ्कारवति ! जब मन्दाक्रान्ताही अन्त्यवर्णरहित हो तो हे कमलमुखि, उसको विद्वानोंद्वारा कहा हुवा निश्चय हंसीछन्द जानो, अर्थात्—मन्दाक्रान्ता विराम चार छै और सात अक्षरके ऊपर होता है, परंतु—इसके प्रतिपादनमें विरामके अर्थ सप्तम वर्ण नहिं होता, शेष संपूर्ण मन्दाक्रान्ताका लक्षण होता है ॥ १९ ॥

दोधकवृत्तम् ।

**आद्यचतुर्थमहीननितम्बे ! सप्तमकं दशमं च तथान्त्यम् ।**
**यत्र गुरु प्रकटस्मरसारे ! तत्कथितं ननु दोधकवृत्तम् २०**

अथ दोधकवृत्तलक्षणमाह—आद्यचतुर्थमिति । हे प्रकटस्मरसारे ! कविभिः तत् ननु दोधकवृत्तं कथितम् । प्रकटः स्मरसारः कामबलं यस्याः सा तस्याः संबोधनम् । हे अहीननितम्बे ! अहीनौ स्थूलौ नितम्बौ कटिपश्चाद्भागौ यस्याः सा तत्संबुद्धौ । यत्र यस्मिन् आद्यचतुर्थं प्रथमं चतुर्थं सप्तमकं सप्तमं दशमं तथा अन्त्यं एकादशं एतानि अक्षराणि गुरूणि सन्ति । तदुक्तं रत्नाकरे—"दोधकवृत्तमिदं भभभागैः" २० दोधकं । च० अ० ११, ग० भ, भ, भ, ग, ग ॥

हे पुष्टनितम्बे ! जिसमें प्रथम चतुर्थ तथा सप्तम दशम और अन्त्य ( ग्यारहवां ) यह अक्षर गुरु हों, हे स्फुटकामवति । उसको निश्चय दोधकवृत्त ( छन्द ) कहते हैं ॥ २० ॥

इन्द्रवज्राछन्दः ।

**यस्यां त्रिषट्सप्तममक्षरं स्याद्धस्वं सुजङ्घे ! नवमं च तद्वत् ।**
**गत्या विलज्जीकृतहंसकान्ते ! तामिन्द्रवज्रां ब्रुवते कवींद्राः**

अथेन्द्रवज्रालक्षणमाह—यस्यामिति ॥ हे गत्या विलज्जीकृतहंसकान्ते ! कवीन्द्रास्तामिन्द्रवज्रां ब्रुवते । गत्या गमनेन विलज्जीकृता हंसस्य कान्तिः शोभा यया सा तस्याः संबोधनम् । तां कां । यस्याः त्रिषट्सप्तममक्षरं ह्रस्वं स्यात् तद्वन्नवमं ह्रस्वं स्यात् । हे सुजङ्घे ! तामिति संबन्धः । एतादृशीं इन्द्रवज्रां ब्रुवते । सुष्ठु शोभने जङ्घे यस्याः सा तत्संबुद्धौ । कवीनां कविषु वा इन्द्राः पूज्या बृहस्पत्यादयः । तदुक्तं रत्नाकरे—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" ॥२१॥ इन्द्रवज्रा । च० अ० ११, ग० त, त, ज, ग, ग; यतिः ५, ६ ॥

हे सुभगजघने ! जिसमें तीसरा छठा और सातवां ताथ

नववां अक्षर ह्रस्व हों, हे मत्तगामिनि ! कविवर उसको इन्द्रवज्रा छन्द कहते हैं ॥ २१ ॥

उपेन्द्रवज्रा ।

**यदीन्द्रवज्राचरणेषु पूर्वे भवन्ति वर्णा लघवः सुवर्णे ! । अमन्दमाद्यन्मदने ! तदानीमुपेन्द्रवज्रा कथिता कवीन्द्रैः**

अथोपेन्द्रवज्रालक्षणमाह—यदीति ॥ हे अमन्दमाद्यन्मदने ! तदानीं कवीन्द्रैः यदीन्द्रवज्राचरणेषु पूर्वे वर्णा लघवः सन्ति शेषमिन्द्रवज्रावत् आद्यवर्णं ह्रस्वमेवेति शेषः । चतुर्ष्वपि पादेषु आद्यो ह्रस्वः । हे सुवर्णे ! सा उपेन्द्रवज्रा कथिता । अमन्दं बहुलं माद्यन् हर्षं कुर्वन्मदनो यस्यां सा तत्संबुद्धौ । तथा चोक्तं रत्नाकरे । उपेन्द्रवज्रा जतजास्ततौ गौ ॥ २२ ॥ उपेन्द्रवज्रा । च० अ० ११, ग० ज, त, ज, ग, ग; यतिः ५, ६ ॥

हे गौराङ्गि ! यदि इन्द्रवज्राहीके चारों पादों [ चरणों ] में पहिले अक्षर लघु [ ह्रस्व ] हों, हे विशेष कामके हर्षवाली वोह कवीश्वरोंद्वारा उपेन्द्रवज्रा छन्द कहा जाताहै ( इसका लक्षण इन्द्रवज्राही जानो ) ॥ २२ ॥

उपजातिः ।

**यत्र द्वयोरप्यनयोस्तु पादा**
**भवन्ति सीमन्तिनि ! चन्द्रकान्ते ! ।**
**विद्वद्भिराद्यैः परिकीर्तिता सा**
**प्रयुज्यतामित्युपजातिरेषा ॥ २३ ॥**

उपजातिलक्षणमाह—यत्रेति ॥ हे चन्द्रकान्ते ! सा एषा उपजातिरिति प्रयुज्यताम् । कथंभूता सा । आद्यैः पुरा-

तनैर्विद्वद्भिः पण्डितैः परिकीर्तिता कथिता । सा का । हे सीमन्तिनि ! यत्र द्वयोरनयोरिन्द्रवज्रोपेन्द्रवज्रयोरपि पादाः यथाक्रमेण भवन्ति । प्रथमे तृतीये च इन्द्रवज्रालक्षणं द्वितीये चतुर्थे च उपेन्द्रवज्रालक्षणम् । सीमन्तः केशवेशो विद्यते तस्याः सा तत्संबुद्धौ । चन्द्रवत्कान्तिर्यस्याः सा तत्संबुद्धौ, पक्षे चन्द्रवत्कान्ता कमनीया या सा तत्संबुद्धौ । तदुक्तं रत्नाकरे—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" ॥ २३ ॥ उपजातिः । च० अ० ११ प्रथमे तृतीये च चरणे इन्द्रवज्रा द्वितीये चतुर्थे चोपेन्द्रवज्रेत्यर्थः ॥

हे सुकेशि ! जिसमें उक्त दोनों ( इन्द्रवज्रा और उपेन्द्रवज्रा ) छन्दोंके चरण हों पहिले और तीसरेमें इन्द्रवज्राके, दूसरे और चौथेमें उपेन्द्रवज्राके चरण हों उसको हे चन्द्रकान्ते ! प्राचीन विद्वानोंद्वारा कहाहुवा उपजाति छन्द जानो ॥ २३ ॥

आख्यानकीछन्दः ।

आख्यानकी स्यात्प्रकटीकृतार्थे !
यदीन्द्रवज्राचरणः पुरस्तात् ।
उपेन्द्रवज्राचरणास्त्रयोऽन्ये
मनीषिणोक्ता विपरीतपूर्वा ॥ २४ ॥

अथाख्यानकीलक्षणमाह—आख्यानकीति ॥ हे प्रकटीकृतार्थे ! मनीषिणा विदुषा यदि इन्द्रवज्रावत्प्रथमचरणः स्यात् । अन्ये त्रयश्चरणा उपेन्द्रवज्रावत्सन्ति तदा विपरीतपूर्वाख्यानकी विपरीताख्यानकीत्यर्थः । प्रकटीकृतोऽर्थः कामलक्षणो यया सा तत्संबुद्धौ । इयं वृत्तरत्नाकरे नोक्ता

तथापि पिङ्गलादिभिराचार्यैर्हलायुधादावुक्तैव ॥ २४ ॥

आख्यानकी । च० अ० ११, प्रथमचरण इन्द्रवज्रावत् अन्ये उपेन्द्रवज्रावत् ॥

हे कामिनि ! यदि प्रथम चरण तौ इन्द्रवज्राका हो और अन्य तीन चरण उपेन्द्रवज्रा छन्दके हों, उसको विद्वानोंद्वारा कहा-हुआ विपरीतपूर्वा अर्थात्—विपरीताख्यानकी छन्द जानो ॥२४॥

रथोद्धताछन्दः ।

आद्यमक्षरमतस्तृतीयकं
सप्तमं च नवमं तथान्तिमम् ।
दीर्घमिन्दुमुखि ! यत्र जायते
तां वदन्ति कवयो रथोद्धताम् ॥ २५ ॥

अथ रथोद्धतालक्षणमाह—आद्यमिति ॥ हे इन्दुमुखि ! कवयः तां रथोद्धतां वदन्ति । कां यत्राद्यमक्षरमतस्तृतीयकं सप्तमं नवमं तथान्तिमं एकादशं एते वर्णा दीर्घा द्विमात्रका जायन्ते । इन्दुवन्मुखं यस्याः सा तत्संबुद्धौ । तदुक्तं रत्नाकरे—"रान्नराविह रथोद्धता लगौ" ॥२५॥ रथोद्धता । च० अ० ११, ग० र, न, र, ल, ग; यतिः ७, ४ ॥

हे चन्द्रमुखि ! जिसमें पहिला—तीसरा सातवां और नौवां तथा अन्तका ( ग्यारहवां ) यह अक्षर दीर्घ हों कवीश्वर महाशय उसको रथोद्धता छन्द कहते हैं ॥ २५ ॥

---

१ इसका लक्षण श्रीकेदारभट्टने वृत्तरत्नाकरमें नहीं लिखा, परन्तु विपरीतपूर्वाका लक्षण तौ श्रीकेदारभट्टने वृत्तरत्नाकरमें और श्रीचिरञ्जीव भट्टाचार्यने वृत्तरत्नावलीमें समानही लिखाहै ॥

स्वागताछन्दः ।

अक्षरं च नवमं दशमं चेद्व्यत्ययाद्भवति यत्र विनीते! ॥
प्रोक्तमेणनयने! यदि सैव स्वागतेति कविभिः कथितासौ

स्वागताया लक्षणमाह—अक्षरमिति ॥ हे एणनयने! सैषा रथोद्धता तदा कविभिः स्वागतेति कथिता । हे विनीते नम्रीभूते ! यदि यत्र यस्यां व्यत्ययाद्वैपरीत्येन नवममक्षरं दशमवद्दशमं नवमवत् नवमो लघुः दशमो गुरुः । द्वौ चकारौ विपरीतार्थसूचकौ । एणस्य नयने इव नयने यस्याः सा तस्याः संबुद्धौ । अयमर्थः—रथोद्धतायां नवमं अक्षरं गुरु भवति, दशमं चाक्षरं लघु भवति । स्वागतायां तु नवममक्षरं लघु दशमं चाक्षरं गुरु भवतीति भावः । तदुक्तं रत्नाकरे–"स्वागतेति रनभाद्गुरुयुग्मम्" ॥ २६ ॥ स्वागता । च० अ० ११, ग० र, न, भ, ग, ग; यतिः ७, ४ ॥

हे विनयवति ! जिस [ रथोद्धता ] में विपरीततासे नवम और दशम अक्षर लघु और गुरु हों, हे हरिणनयने ! पण्डितोंने उसका स्वागता नाम कहाहै ॥ २६ ॥

वैश्वदेवीछन्दः ।

ह्रस्वो वर्णः स्यात्सप्तमो यत्र बाले !
तद्वद्बिम्बोष्ठि ! न्यस्त एकादशाद्यः ॥
बाणैर्विश्रामस्तत्र चेद्वा तुरङ्गै–
र्नाम्ना निर्दिष्टा सुभ्रु ! सा वैश्वदेवी ॥ २७ ॥

---

१ रथोद्धता छन्दमें नवम अक्षर गुरु और दशम लघु होता है, स्वागतामें नवम लघु और दशम गुरु होता है ॥

अथ वैश्वदेवीलक्षणमाह—ह्रस्व इति ॥ यत्र सप्तमो वर्णो ह्रस्वः स्यात्। हे बाले षोडशवर्षाभ्यन्तरवयस्के! तद्वत् पूर्वोक्तप्रकारवत्। हे बिम्बोष्ठि! एकादशाद्यो दशमो वर्णो ह्रस्वः स्यात्। एवं न्यस्तः निक्षिप्तः स्याच्चेद्यदि तत्र बाणैः पञ्चभिस्तुरङ्गैः सप्तभिश्च विश्रामः स्यात्। हे सुभ्रु! सा नाम्ना वैश्वदेवी निर्दिष्टा कथिता। सुष्ठु भ्रुवौ यस्याः सा तस्याः संबुद्धौ। बिम्बवदोष्ठौ यस्याः सा। एकादशादौ जात एकादशाद्यः ॥ तदुक्तं रत्नाकरे—"पञ्चाश्वैश्छिन्ना वैश्वदेवी मौ यौ" ॥ २७ ॥ वैश्वदेवी। च० अ० १२; ग० म, म; य, य, यतिः ५, ७, ॥

हे बाले! जिसमें सप्तम और दशम यह दो अक्षर ह्रस्व हों, और हे बिम्बोष्ठि! पांच वा सात अक्षरके ऊपर विश्राम हों, उसको वैश्वदेवी छन्द कहाहै ॥ २७ ॥

### तोटकवृत्तम्।

**सतृतीयकषष्ठमनन्तरते! नवमं विरतिप्रभवं गुरु चेत् ॥**
**घनपीनपयोधरभारनते! ननु तोटकवृत्तमिदं कथितं २८**

द्वादशाक्षरजातौ तोटकलक्षणमाह—सतृतीयकेति ॥ हे घनपीनपयोधरभारनते! ननु इह निश्चितं तोटकवृत्तं कथितं वर्णितम्। चेद्यदि हे अनन्तरते! सतृतीयकं षष्ठं नवमं गुरु स्यात्तृतीयं षष्ठं च तृतीयषष्ठे ताभ्यां सह वर्तत इति। कीदृशम्। विरतिप्रभवं अन्त्यं द्वादशं गुरु स्यात्। अनन्ता अपरिमिता रतिर्यस्याः सा अनन्तरता तत्संबुद्धौ। घनौ च पीनौ च घनपीनौ कठिननिबिडौ पयोधरौ च तयोर्भारः

आधिक्यं तेन नता नम्रीभूता या सा तत्संबुद्धौ । विरते प्रभव उत्पत्तिर्यस्य तत्तथोक्तम् । तदुक्तं रत्नाकरे-"इह तोटकमंबुधिसैः कथितम्" ॥ २८ ॥ तोटकम् । च० अ० १२, ग० स, स, स, स; यतिः ६, ६, ॥

हे अत्यन्तप्यारी ! जिसमें तीसरा छठा और नववाँ तथा अन्त्यका [ बारहवाँ ] यह अक्षर दीर्घ हों हे सघन और पुष्ट उरोजोंके भारसे नम्र हुईवाले ! उसको तोटकवृत्त कहते हैं ॥२८॥

भुजङ्गप्रयातं छन्दः ।

**यदाद्यं चतुर्थं तथा सप्तमं चे-**
**त्तथैवाक्षरं ह्रस्वमेकादशाद्यम् ॥**
**शरच्चन्द्रविद्वेषिवक्त्रारविन्दे !**
**तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातम् ॥ २९ ॥**

भुजङ्गप्रयातलक्षणमाह—यदाद्यमिति ॥ हे शरच्चन्द्रविद्वेषिवक्त्रारविन्दे ! कवीन्द्रैस्तच्छन्दो भुजङ्गप्रयातमुक्तं कथितम् । किंभूतम् । चेद्यदा आद्यं प्रथमं तथा चतुर्थं तथा सप्तमं एव निश्चितं एकादशाद्यं एकादशस्यादिभूतं दशममक्षरं ह्रस्वं स्यादिति संबन्धः । शरदः चन्द्रः शरच्चन्द्रः तस्य विद्वेषि वक्त्रमेवारविन्दं यस्याः सा तत्संबुद्धौ । तदुक्तं रत्नाकरे-"भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः" ॥ २९ ॥ भुजङ्गप्रयातम् । च० अ० १२, ग० य, य, य, य; यतिः ६, ६, ॥

हे प्रसन्नमुखि ! [ कमलवदने ] जहां प्रथम चतुर्थ तथा सप्तम और दशम यह अक्षर ह्रस्व हों उसको कवीश्वरोंनें भुजङ्गप्रयात छन्द कहाहै ॥ २९ ॥

द्रुतविलम्बितं छन्दः ।

अयि कृशोदरि ! यत्र चतुर्थकं
गुरु च सप्तमकं दशमं तथा ॥
विरतिगं च तथैव विचक्षणै-
र्द्रुतविलम्बितमित्युपदिश्यते ॥ ३० ॥

द्रुतविलम्बितलक्षणमाह—अयि कृशोदरीति ॥ अयि इति कोमलालापे । विचक्षणैः पण्डितैर्द्रुतविलम्बितमित्युपदिश्यते । इति किम् । हे कृशोदरि ! यत्र चतुर्थकं चेत्सप्तमकं तथा दशमं इमान्यक्षराणि गुरूणि सन्ति । विरतिगं अन्त्यं द्वादशं गुरु स्यादित्यर्थः । कृशमुदरं यस्याः सा कृशोदरी तत्संबुद्धौ । तदुक्तं रत्नाकरे—"द्रुतविलम्बितमाह नभौ भरौ" ॥ ३० ॥ द्रुतविलम्बितम् च० अ० १२, ग० न, भ, भ, र ॥

अयि कृशोदरि ! जिसमें चतुर्थ सप्तम तथा दशम और अन्त्यज ( बारहवाँ ) यह अक्षर गुरु ( दीर्घ ) हों, उसको पण्डितलोग द्रुतविलम्बित छन्द कहतेहैं ॥ ३० ॥

प्रमिताक्षराछन्दः ।

यदि तोटकस्य गुरु पञ्चमकं
विहितं विलासिनि ! तदक्षरकम् ॥
रससंख्यकं गुरु न चेदबले !
प्रमिताक्षरेति कविभिः कथिता ॥ ३१ ॥

प्रमिताक्षरालक्षणमाह—यदि तोटकस्येति ॥ हे अबले ! कविभिः प्रमिताक्षरा इति कथिता । किम् । हे

विलासिनि ! यदि तोटकस्य उक्तलक्षणकस्य पञ्चमकं वर्णं गुरु विहितं स्यात् । रससंख्यकं षष्ठं गुरु न चेत् गुरु तु पञ्चममेव सा प्रमिताक्षरेत्यर्थः । विलासो विभ्रमो यस्याः सा विलासिनी तत्संबुद्धौ । तदुक्तं रत्नाकरे–"प्रमिताक्षरा सजससैरुदिता" ॥ ३१ ॥ प्रमिताक्षरा ॥ च० अ० १२, ग० स, ज, स, स ॥

हे विभ्रमवति ! यदि तोटक छन्दका पंचम वर्ण गुरु हो, और छठा अक्षर लघु हो, हे अबले ! उसको प्रमिताक्षरा छन्द कहाहै ॥ ३१ ॥

हरिणीप्लुताछन्दः ।

**प्रथमाक्षरमाद्यतृतीययो-**
**र्द्रुतविलम्बितकस्य च पादयोः ॥**
**यदि चेन्न तदा कमलेक्षणे !**
**भवति सुन्दरि ! सा हरिणीप्लुता ॥ ३२ ॥**

अथ हरिणीप्लुतालक्षणमाह—प्रथमाक्षरमिति ॥ हे कमलेक्षणे ! सुकविभिः तदेयं हरिणीप्लुता कथिता, यदि द्रुतविलम्बितकस्य छन्दसः आद्यतृतीययोः पादयोः प्रथमाक्षरं चेत् एकादशाक्षरमेवं विषमपादयोः तदेयं हरिणीप्लुता । कमलवदीक्षणे यस्याः साः तत्संबुद्धौ हे सुन्दरि शुभाङ्गे ! । तदुक्तं रत्नाकरे । १, ३; सौ स्लौ गः । २, ४; न्भौ भ्रौ । पक्षे हरिणीप्लुता ॥ ३२ ॥ हरिणीप्लुता ॥ च० १, ३; अ० ११, ग० स, स, स, ल, ग ॥ २, ४; अ० १२, ग० न, भ, भ, र ॥

हे कमलनयने ! जिसमें द्रुतविलम्बित छन्दके प्रथम और तृतीयपादके [ प्रथम–तृतीयपादमें– ] आदिका अक्षर हो, तौ हे सुन्दरि ! उसको हरिणीप्लुता कहतेहैं ॥ ३२ ॥

वंशस्थं वृत्तम् ।

उपेन्द्रवज्राचरणेषु सन्ति चे-
दुपान्त्यवर्णा लघवः कृता यदा ॥
मदोल्लसद्भ्रूजितकामकार्मुके !
वदन्ति वंशस्थमिदं बुधास्तदा ॥ ३३ ॥

वंशस्थलक्षणमाह—उपेन्द्रवज्रेति ॥ हे मदोल्लसद्भ्रूजितकामकार्मुके ! तदा बुधा इदं वंशस्थं वदन्ति । तदा कदा । यदा उपेन्द्रवज्राचरणेषु उपान्त्यवर्णाः अन्त्यसमीपस्था वर्णा एकादशसंज्ञका लघवः सन्ति प्रतिचरणे एकादशो वर्णो लघुस्तदा वंशस्थम् । मदेन उल्लसन्तौ भ्रुवौ ताभ्यां जितं कामकार्मुकं मदनधनुर्यया सा तत्संबुद्धौ । अन्त्यस्य समीपमुपान्त्यम् । उपान्त्ये भवा उपान्त्याः । उपान्त्याश्च ते वर्णाश्चेति । तदुक्तं रत्नाकरे—"जतौ तु वंशस्थमुदीरितं जरौ" ॥ ३३ ॥ वंशस्थम् ॥ च० अ० १२, ग० ज, त, ज, र, यतिः ५, ७ ॥

हे तिर्छी चितवनवाली ! यदि उपेन्द्रवज्रा छन्दके चारों चरणोंमें ग्यारहवें अक्षर लघु हों, तब उसको पण्डितजन वंशस्थवृत्त ( छन्द ) कहतेहैं ॥ ३३ ॥

इन्द्रवंशाछन्दः ।

यस्यामशोकाङ्कुरपाणिपल्लवे !
वंशस्थपादा गुरुपूर्ववर्णकाः ॥

तारुण्यहेलारतिरङ्गलालसे !
तामिन्द्रवंशां कवयः प्रचक्षते ॥ ३४ ॥

इन्द्रवंशालक्षणमाह—यस्यामशोकेति ॥ हे तारुण्यहेलारतिरङ्गलालसे ! कवयो यस्यां वंशस्थपादा गुरुपूर्ववर्णका भवन्ति । हे अशोकाङ्कुरपाणिपल्लवे ! तामिन्द्रवंशां प्रचक्षते ब्रुवते । अशोकाङ्कुराविव पाणिपल्लवौ यस्याः सा । तारुण्यस्य हेलास्ताभी रतिरङ्गे लालसा अभिलाषो यस्याः सा तत्संबुद्धौ । तदुक्तं रत्नाकरे—“स्यादिन्द्रवंशा तौ ज्रौ” ॥ ३४ ॥ इन्द्रवंशा ॥ च० अ० १२, ग० त, त, ज, र; यतिः ५, ७ ॥

हे अशोकवृक्षके पल्लवोंके समान पाणिपल्लववाली वल्लभे ! जिसमें वंशस्थवृत्तके पादोंके प्रथम वर्ण गुरु हों उसे हे विलासिनि ! कवीश्वर इन्द्रवंशा कहतेहैं ॥ ३४ ॥

प्रभावतीछन्दः ।

यस्यां प्रिये ! प्रथमकमक्षरद्वयं
तुर्यं तथा गुरु नवमं दशान्तिकम् ॥
सान्त्यं भवेद्यतिविरतिर्युगग्रहैः
सा लक्षिता ह्यमृतलते ! प्रभावती ॥ ३५ ॥

त्रयोदशाक्षरजातौ प्रभावतीलक्षणमाह—यस्यामिति ॥ हे अमृतलते ! यस्यां प्रथममक्षरद्वयं तुर्यं तथा चतुर्थं तथा नवमं दशान्तिकं दशसहितं त्रयोदशं वर्णं युगग्रहैश्चतुर्भिर्नवभिश्चाक्षरैर्विरतिः सा प्रभावती लक्षिता कथिता । अमृतस्य लतेव लता या सा तत्संबुद्धौ ॥ ३५ ॥ प्रभावती ॥ च० अ० १३, ग० ज, भ, स, ज, ग; यतिः ४, ९ ॥

हे प्रिये ! जिसमें आदिके दो अक्षर और चतुर्थ नवम और

दशम तथा तेरहवां अक्षर दीर्घ हों, हे सुधाबेलि! और तथा नवम अक्षरके ऊपर विराम हो उसको प्रभावती छन्द कहते हैं ३५

प्रहर्षिणीछन्दः ।

**आद्यं चेत्त्रितयमथाष्टमं नवान्त्यं**
**द्वे चान्त्ये गुरुविरतौ सुभाषिते! स्यात् ॥**
**विश्रामो भवति महेशनेत्रदिग्भि-**
**र्विज्ञेया ननु सुदति! प्रहर्षिणी सा ॥ ३६ ॥**

अथ प्रहर्षिणीलक्षणमाह—आद्यमिति ॥ हे सुदति! ननु इति निश्चितं आद्यं त्रितयं प्रथमतः वर्णत्रयं अथाऽष्टमं नवान्त्यं दशमं चान्त्ये द्वे द्वादशत्रयोदशाख्ये एते गुरवो भवन्ति । हे सुभाषिते! महेशनेत्रैर्वर्णत्रयानन्तरं दिग्भिर्दश-वर्णानन्तरं च विश्रामः स्यात् सा प्रहर्षिणी विज्ञेया ज्ञातव्या। सु शोभनं भाषणं यस्याः सा । सुशोभना दन्ता यस्याः सा सुदती तत्संबुद्धौ । तदुक्तं रत्नाकरे—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" ॥ ३६ ॥ प्रहर्षिणी ॥ च० अ० १३, ग० म, न, ज, र, ग; यतिः ३, १० ॥

हे मृदुभाषिणि! जिसकी आदिके तीन अक्षर अनन्तर अष्टम तथा दशम और बारहवें तेरहवें यह अक्षर गुरु हों, और जिसमें तीन और दश अक्षरोंके पीछे विश्राम हो, उसको निश्चय प्रहर्षिणी छन्द जानना चाहिये ॥ ३६ ॥

वसन्ततिलकाछन्दः ।

**आद्यं द्वितीयमपि चेद्गुरु तच्चतुर्थं**
**यत्राष्टमं च दशमान्त्यमुपान्त्यमन्त्यम् ॥**
**कामाङ्कुशाङ्कुशितकामिमतङ्गजेन्द्रे!**
**कान्ते! वसन्ततिलकां किल तां वदन्ति ॥३७॥**

---

१ पाठा० 'अष्टाभिरिन्दुवदने! विरतिश्च षड्भिः' ॥

चतुर्दशाक्षरजातौ वसन्ततिलकालक्षणमाह—आद्यमिति। हे कामाङ्कुशाङ्कुशितकामिमतङ्गजेन्द्रे! यत्र आद्यं प्रथमं द्वितीयमपि गुरु चतुर्थं दशमान्त्यं एकादशमुपान्त्यं त्रयोदशं अन्त्यं चतुर्दशं एते गुरवः स्युः। हे कान्ते! बुधास्तां वसन्ततिलकां वदन्ति। काम एवाङ्कुशस्तेनाङ्कुशिता वशीकृताः कामिन एव मतङ्गजेन्द्रा यया सा तत्संबुद्धौ। तदुक्तं रत्नाकरे—"उक्ता वसन्ततिलका तभजा जगौ गः" ॥३७॥ वसन्ततिलका॥ च० अ० १४, ग० त, भ, ज, ज, ग, ग॥

हे कामिनि! यदि प्रथम और द्वितीय तथा चतुर्थ और अष्टम, ग्यारहवां और चौदहवां यह अक्षर गुरु हों, हे कान्ते! पण्डितवर्य उसको वसन्ततिलका छन्द कहतेहैं ॥ ३७ ॥

मालिनीछन्दः।

**प्रथममगुरुषट्कं विद्यते यत्र कान्ते!**
**तदनु च दशमं चेदक्षरं द्वादशान्त्यम् ॥**
**करिभिरथ तुरङ्गैर्यत्र कान्ते! विरामः**
**सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा ॥३८॥**

पञ्चदशाक्षरजातौ मालिनीलक्षणमाह॥ प्रथममिति॥ हे कान्ते! यत्र प्रथमं षट्कमगुरु लघ्वेव भवति तदनु दशमं द्वादशान्त्यं त्रयोदशं च लघु। करिभिरथ तुरङ्गैरष्टभिः सप्तभिश्च विरामस्तदा सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा कृता। तदुक्तं रत्नाकरे—"ननमयययुतेयं मालिनी भोगिलोकैः" ॥ ३८॥ मालिनी ॥ च० अ० १५, ग० न, न, म, य, य; यतिः ८, ७ ॥

हे कान्ते! जिसकी आदिके छै अक्षर ह्रस्व हों, तदनन्तर दशम और तेरहवां यह अक्षर लघु हों, हे सुन्दरि, और सात

तथा आठ अक्षरोंके ऊपर विराम हो, श्रेष्ठकवीश्वरोंके मनका हरनेवाला बोध छन्द मालिनीनामसे प्रसिद्ध है ॥ ३८ ॥

हरिणीछन्दः ।

**सुमुखि! लघवः पञ्च प्राच्यास्ततो दशमान्तिकं**
**तदनु ललितालापे वर्णौ! यदि त्रिचतुर्दशौ ॥**
**प्रभवति पुनर्यत्रोपान्त्यः स्फुरत्करकङ्कणे!**
**यतिरपि रसैर्वेदैरश्वैः स्मृता हरिणीति सा॥ ३९ ॥**

सप्तदशाक्षरजातौ हरिणीलक्षणमाह—सुमुखीति ॥ हे स्फुरत्करकङ्कणे ! यत्र प्राच्याः प्रथमाः पञ्च वर्णा लघवः सन्ति । ततो दशमान्तिक एकादशः हे ललितालापे ! यदि त्रिचतुर्दशौ त्रयोदशचतुर्दशौ लघू स्यातां उपान्त्यः षोडशोऽपि लघुः । रसैः षड्भिर्वेदैश्चतुर्भिरश्वैः सप्तभिश्च विरामः स्यात्तदा सा हरिणी स्मृता । स्फुरन्ति करयोः कङ्कणानि यस्याः सा । ललित आलापो यस्याः सा । उक्तं च रत्नाकरे—"रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" ॥ ३९ ॥ च० अ० १७, ग० न, स, म, र, स, ल, ग; यतिः ६, ४, ७ ॥

हे सुमुखि ! जिसकी आदिके पांच वर्ण ह्रस्व हों, तत्पश्चात् एकादश तेरहवां और चौदहवां तथा सोलहवां यह अक्षर लघु हों, और हे मंजुभाषिणि ! जिसमें छै चार और सात अक्षरोंके ऊपर विरति ( विराम ) हो, हे स्फुरायमाण करकङ्कणवाली ! वो छन्द हरिणी नामसे कहा गयाहै ॥ ३९ ॥

शिखरिणीछन्दः ।

**यदा पूर्वो ह्रस्वः कमलनयने षष्ठकपरा-**
**स्ततो वर्णाः पञ्च प्रकृतिसुकुमाराङ्गि! लघवः ॥**

---

१ पाठा० 'तृतीयचतुर्थकौ' । २ 'यदि प्राच्यो' । ३ 'पञ्च गुरवः' ।

त्रयोऽन्ये चोपान्त्याः सुतनु जघनाभोगसुभगे !
रसै रुद्रैर्यस्यां भवति विरतिः सा शिखरिणी ॥४०॥

अथ शिखरिणीलक्षणमाह—यदा पूर्वो ह्रस्व इति ॥ हे सुतनुजघनाभोगसुभगे ! यदा पूर्वो वर्णो ह्रस्वो भवति । हे प्रकृतिसुकुमाराङ्गि ! ततः षष्ठकपराः षष्ठतः पञ्च वर्णाः सप्तमाष्टमनवमदशमैकादशा लघवः सन्ति । अन्त्ये उपान्त्यास्त्रयो वर्णाश्चतुर्दशपञ्चदशषोडशा लघवो भवन्ति । यस्यां रसैः षड्भी रुद्रैरेकादशैर्विरतिर्भवेत् । हे सुतनु ! सा शिखरिणी कथिता । कमलवन्नयने यस्याः सा । प्रकृत्या स्वभावेन सुकुमाराण्यङ्गानि यस्याः । जघनयोराभोगस्तेन सुभगा सुशोभना तनुर्यस्याः सा तत्संबुद्धौ । तदुक्तं रत्नाकरे–"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" ॥ ४० ॥ शिखरिणी । च० १७, ग० य, म, न, स, भ, ल, ग; यतिः ६, ११ ॥

हे कमलनयने ! जब प्रथम वर्ण लघु हो, तदनु सात आठ नव दश ग्यारह यह पांच अक्षर–ह्रस्व हों, तथा हे स्वभावकोमलाङ्गि ! चौदह पन्द्रह सोलह यह तीन अक्षर लघु हों, और हे शोभनाङ्गि ! हे कामिनि ! छै और ग्यारह अक्षरके उपर विश्राम हों, उसको शिखरिणी छन्द कहतेहैं ॥ ४० ॥

पृथ्वीछन्दः ।

द्वितीयमलिकुन्तले ! यदि षडष्टमं द्वादशं
चतुर्दशमथ प्रिये ! गुरु गभीरनाभिह्रदे ! ॥
सपञ्चदशमन्तिकं तदनु यत्र कान्ते ! यति-
र्गिरीन्द्रफणिभृत्कुलैर्भवति सुभ्रु ! पृथ्वी हि सा ४१

पृथ्वीलक्षणमाह—द्वितीयमिति ॥ हे सुभ्रु ! यदि द्वितीयसंख्याकं गुरु स्यात् हे अलिकुन्तले ! षष्ठमष्टमं च गुरु हे प्रिये ! द्वादशमथ चतुर्दशं गुरु हे गभीरनाभिह्रदे ! पञ्चदशेन सहितमन्तिमं गुरु स्यात् । हे कान्ते ! यत्र गिरीन्द्रैरष्टभिः फणिभृत्कुलैर्नवभिश्च यतिः स्यात्सा पृथ्वीनामकं वृत्तं भवति । अलिवद्भ्रमरवच्छ्यामाः कुन्तला अलका यस्याः सा तत्संबुद्धौ । तदुक्तं रत्नाकरे–"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" ॥४१॥ पृथ्वी । च० अ० १७, ग० ज, स, ज, स, य, ल, ग; यतिः ८, ९ ॥

हे श्यामचूडावाली कान्ते ! यदि द्वितीय छठा और अष्टम तथा बारहवां और चौदहवां यह अक्षर गुरु हो, तदनन्तर पन्द्रहवां और अन्त्य यह अक्षरभी गुरु हो, हे गम्भीरनाभिवति प्रिये ! यदि आठ और नव अक्षरके ऊपर विराम हो, हे कमानकी समान भ्रुकुटिवाली ! उसको पृथ्वीछन्द कहतेहैं ॥४१॥

### मन्दाक्रान्तावृत्तम् ।

चत्वारः प्राक् सुतनु गुरवो द्वादशैकादशौ चे-
न्मुग्धे ! वर्णौ तदनु कुमुदामोदिनि ! द्वादशान्त्यौ ॥
तद्वच्चान्त्यौ युगरसहयैर्यत्र कान्ते ! विरामो
मन्दाक्रान्तां प्रवरकवयस्तन्वि ! तां संगिरन्ते ॥४२॥

मन्दाक्रान्तालक्षणमाह—चत्वार इति ॥ हे तन्वि ! प्रवरकवयो यत्र प्राक् चत्वारो वर्णा गुरवः स्युः हे कुमुदामोदिनि ! चेद्वर्णौ द्वादशैकादशौ गुरू स्तः हे मुग्धे ! द्वादशान्त्यौ द्वादशस्यान्त्यस्थितौ त्रयोदशचतुर्दशौ गुरू स्यातां अन्त्यौ षोडशसप्तदशौ तद्वद्गुरू युगरसहयैर्विरामः एतादृशीं

तां मन्दाक्रान्तां संगिरन्ते । कुमुदवदामोदः सुगन्धिर्यस्याः सा । तथोक्तं रत्नाकरे—"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ॥ ४२ ॥ मन्दाक्रान्ता । च० अ० १७, ग० म, भ, न, त, त; ग, ग; यतिः ४, ६, ७, ॥

हे हमारी प्यारी ! जिसकी आदिके तीन अक्षर गुरु हों, तत्पश्चात्–छठा और आठमा यह अक्षर दीर्घ हों, तदनु–बारह तेरह और चौदह तथा सोलह और सत्रहवां यह अक्षरभी गुरु हों, और हे मयङ्कमुखि ! बारह तथा सात अक्षरके ऊपर विश्राम हो, काव्यरसिक जन उसको मन्दाक्रान्ता छन्द कहते हैं ॥

शार्दूलविक्रीडितं छन्दः ।

आद्याश्चेद्गुरवस्त्रयः प्रियतमे! षष्ठस्तथा चाष्टमो
नन्वेकादशतस्त्रयस्तदनु चेदष्टादशाद्यौ ततः ॥
मार्तण्डैर्मुनिभिश्च यत्र विरतिः पूर्णेन्दुबिम्बानने!
तद्वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूलविक्रीडितम् ॥

एकोनविंशतिजातौ शार्दूलविक्रीडितमाह—आद्या इति ॥ हे पूर्णेन्दुबिम्बानने! काव्यरसिकास्तद्वृत्तं शार्दूलविक्रीडितमिति वदन्ति । यत्राद्यास्त्रयो गुरवः षष्ठस्तथाऽष्टमः गुरुः । ननु एकादशतस्त्रयः द्वादशत्रयोदशचतुर्दशा गुरवः । ततश्चेद्ष्टादशस्यादौ षोडशसप्तदशौ गुरू स्याताम् । यत्र मार्तण्डैर्मुनिभिर्द्वादशसप्तभिर्विरतिः हे प्रियतमे ! तदेतच्छार्दूलविक्रीडितम् । पूर्णश्चासाविन्दुश्च पूर्णेन्दुस्तस्य बिम्बवदाननं यस्याः सा, अतिशयेन प्रिया प्रियतमा तस्याः संबुद्धौ । तदुक्तं रत्नाकरे—"सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलवि-

क्रीडितम् ॥ ४३ ॥ शार्दूलविक्रीडितम् । च० अ० १९, ग० म, स, ज, स, त, त; ग, यतिः १२, ७ ॥

स्रग्धरा वृत्तम् ।

**चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठतः सप्तमोऽपि द्वौ तद्वत्षोडशाद्यौ मृगमदमुदिते षोडशान्त्यौ तथान्त्यौ रम्भास्तम्भोरुकान्ते मुनिमुनिमुनिभिर्दृश्यते चेद्विरामो बाले ! वन्द्यैः कवीन्द्रैः सुतनु ! निगदिता स्रग्धरा सा प्रसिद्धा ॥ ४४ ॥**

इति श्रीकविकालिदासकृतः श्रुतबोध-
नामकश्छन्दोग्रन्थः समाप्तः ॥

एकविंशत्यक्षरजातौ स्रग्धरालक्षणमाह—चत्वार इति । हे सुतनु! वन्द्यैः पूज्यैः कवीन्द्रैः प्रसिद्धा इयं स्रग्धरा गदिता । यत्र प्रथमं चत्वारो वर्णा अलघवो गुरवः सन्ति षष्ठकः सप्तमोऽपि तद्वद्गुरुः । षोडशाद्यौ चतुर्दशपञ्चदशौ तथान्त्यौ सप्तदशाष्टादशौ गुरू स्याताम् । मुनिमुनिमुनिभिर्विरामः । हे रम्भास्तम्भोरुकान्ते हे बाले ! इयं स्रग्धरा प्रसिद्धा मृगस्य मदेन । मुदिता या सा । रम्भायाः स्तम्भवदूर्वोः कान्तिर्यस्याः सा । सुशोभना दन्ता यस्याः सा तत्संबुद्धौ । तदुक्तं रत्नाकरे—"म्रौ भ्नौ यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" ॥ ४४ ॥ इति श्रीश्रुतबोधनामकस्य छन्दोग्रन्थस्य व्याख्या समाप्ता ॥ स्रग्धरा । च० अ० २१, ग० म, र, भ, न, य, य, य; यतिः ७, ७, ७ ॥

हे मृगमदसौरभवासिनि ! जिसकी आदिमें चार अक्षर गुरु हों, हे रम्भोरु ! तथा छठा और सातवां चौदहवां तथा पन्द्र-

# गणदेवतारूपदेशफलादिज्ञापक यन्त्र

| सख्या | गणनाम | रूप | देवता | नक्षत्र | राशि | जन्मवार | जाति | मास | पक्ष | तिथि | वर्ण | देश | पुरी | पर्वत | फल | मित्रादि | फल | स्त्री | मन्त्र |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | मगण | SSS | पृथ्वी | रोहिणी | वृष | शनि | शूद्र | पौष | शुक्र | १० | मिश्रित | जालंधर | स्वर्ग | शैलाद्रि | लक्ष्मी | मित्र | शुभ | कमला | ॐ मं-मगणाय नमः ॥ १ ॥ |
| २ | यगण | ISS | जल | ज्येष्ठा | वृश्चिक | चन्द्र | वैश्य | आषाढ | शुक्र | १२ | श्याम | कोशल | विपुला | वंशकेवर्त | आयु | दास | शुभ | ब्रह्माणी | ॐ यं-यगणाय नमः ॥ २ ॥ |
| ३ | रगण | SIS | अग्नि | अश्विनी | मेष | रवि | क्षत्री | पौष | शुक्र | ९ | रक्त | महेंद्र | मकरन्द | मलयाचल | दाह | शत्रु | अशुभ | स्वधा | ॐ रं-रगणाय नमः ॥ ३ ॥ |
| ४ | सगण | IIS | पवन | पूर्वाभाद्रपदा | कुम्भ | बुध | वैश्य | कार्तिक | शुक्र | ६ | नील | विडम्बर | कंकेर | सेतुबन्ध | परदेश | शत्रु | अशुभ | गारुडी | ॐ सं-सगणाय नमः ॥ ४ ॥ |
| ५ | तगण | SSI | आकाश | रेवती | मीन | भौम | शूद्र | चैत्र | शुक्र | ३ | धूम्र | कुन्तल | चम्पावती | कर्णागिरि | शून्य | उदासीन | समान | शून्य | ॐ तं-तगणाय नमः ॥ ५ ॥ |
| ६ | जगण | ISI | सूर्य | श्रवण | मकर | शुक्र | ब्राह्मण | मार्गशिर | शुक्र | ५ | रक्त | प्रबल | चित्रपुरी | उदयाचल | रोग | उदासीन | अशुभ | आतपा | ॐ जं-जगणाय नमः ॥ ६ ॥ |
| ७ | भगण | SII | चन्द्रमा | रेवती | मीन | गुरु | देवता | आश्विन | शुक्र | १३ | श्वेत | शुक्र | प्रभावतीपुरी | मिमारगिरि | यश | दास | शुभ | शुक्ला | ॐ भं-भगणाय नमः ॥ ७ ॥ |
| ८ | नगण | III | स्वर्ग | अनुराधा | वृश्चिक | बुध | क्षत्री | ज्येष्ठ | शुक्र | १५ | गौर | क्रौंच | काञ्चीपुरी | चन्द्रगिरि | सुख | मित्र | शुभ | संजीविनी | ॐ नं-नगणाय नमः ॥ ८ ॥ |

ता०-१११११८९५
रुहेलखण्ड.

व्रजरत्नभट्टाचार्य्य,
मुरादाबाद,
मोहल्ला-पट्टवरगञ्ज.

## गणदेवतारूपदेशफलादिज्ञापक यन्त्र.

| मास | पक्ष | तिथि | वर्ण | देश | पुरी | पर्वत |
|---|---|---|---|---|---|---|
| पौष | शुक्ल | १० | मिश्रित | जालंधर | स्वर्ग | शैलाद्रि |
| आषाढ | शुक्ल | १२ | श्याम | कोशल | विपुला | वंशकैवर्त |
| पौष | शुक्ल | ९ | रक्त | महेंद्र | मकरन्द | मलयाचल |
| कार्तिक | शुक्ल | ६ | नील | विडम्बर | कंकेर | सेतुबन्ध |
| चैत्र | शुक्ल | ३ | धूम्र | कुन्तल | चम्पावती | कर्णागिरि |
| मार्गशिर | शुक्ल | ५ | रक्त | प्रबल | चित्रपुरी | उदयाचल |
| आश्विन | शुक्ल | १३ | श्वेत | शुक्ल | प्रभावतीपुरी | मिमारगिरि |
| ज्येष्ठ | शुक्ल | १५ | गौर | क्रौंच | काञ्चीपुरी | चन्द्रगिरि |

| फल | मित्रादि | फल | स्त्री | मन्त्र |
|---|---|---|---|---|
| लक्ष्मी | मित्र | शुभ | कमला | ॐ मं–मगणाय नमः ॥ १ ॥ |
| आयु | दास | शुभ | ब्रह्माणी | ॐ यं–यगणाय नमः ॥ २ ॥ |
| दाह | शत्रु | अशुभ | स्वधा | ॐ रं-रगणाय नमः ॥ ३ ॥ |
| परदेश | शत्रु | अशुभ | गारुडी | ॐ सं–सगणाय नमः ॥ ४ ॥ |
| शून्य | उदासीन | समान | शून्य | ॐ तं–तगणाय नमः ॥ ५ ॥ |
| रोग | उदासीन | अशुभ | आतपा | ॐ जं–जगणाय नमः ॥ ६ ॥ |
| यश | दास | शुभ | शुक्का | ॐ भं–भगणाय नमः ॥ ७ ॥ |
| सुख | मित्र | शुभ | संजीविनी | ॐ नं–नगणाय नमः ॥ ८ ॥ |

०–११।११८९५
रुहेलखण्ड.

ब्रजरत्नभट्टाचार्य्य,
मुरादाबाद,
मोहल्ला–पटुवरगञ्ज.

हवां, सत्तरह और अठारहवां और वीस तथा इक्कीसवां यह अक्षर गुरु हों, हे बाले ! सात २ वर्णोंके ऊपर विश्राम हो, हे सुतनु ! सुप्रसिद्ध उस छन्दका वन्दनीय कवि गुरुओंने स्रग्धरा नाम कहा है ॥ ४२ ॥

इति श्रीसर्वविद्याविशारदश्रीपण्डितवर्य्यज्वालानाथसूनुव्रजरत्न-भट्टाचार्यमुरादाबादनिवासिप्रणीतहिन्दीभाषानुवादः संपूर्णः ॥ शुभं भवतु मंगलमस्तु श्रीरस्तु ॥

---

भो भूमिः श्रियमातनोति य जलं वृद्धिं र चाग्निर्मृतिं
सो वायुः परदेशदूरगमनं त व्योम शून्यं फलम् ॥
जः सूर्यो रुजमाददाति विपुलं भेन्दुर्यशो निर्मलं
नो नाकश्च सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः १

अथ गणसंख्यानामरूपदेवताफलादिज्ञापकं यन्त्रम् ॥

## गणनामदेवताफलानि ।

| संख्या | गणनाम | रूपम् | देवता | फलम् | मित्रादि | शुभाशुभे |
|---|---|---|---|---|---|---|
| १ | मगणः | SSS | मही | लक्ष्मीः | मित्रम् | शुभम् |
| २ | यगणः | ISS | जलम् | आयुः | दासः | शुभम् |
| ३ | रगणः | SIS | अग्निः | दाहः | शत्रुः | अशुभम् |
| ४ | सगणः | IIS | वायुः | विदेशः | शत्रुः | अशुभम् |
| ५ | तगणः | SSI | नभः | शून्यम् | उदासः | समम् |
| ६ | जगणः | ISI | रविः | रोगः | उदासः | अशुभम् |
| ७ | भगणः | SII | शशी | यशः | दासः | शुभम् |
| ८ | नगणः | III | स्वर्गः | सुखम् | मित्रम् | शुभम् |

जः [illegible] भेन्दुर्यशो निर्मलम्

[illegible] सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः ॥१

अनुवाद—मगणका भूमि देवता है, वोह लक्ष्मीका विस्त करत है; यगणका जलदेवता है वोह आयु देता है, रगणक देवता अग्नि है, वोह दाह देता है, सगणका वायु देवता है, वो परदेश वा दूरगमन करता है, तगणका आकाश देवता औ शून्य फल है, जगणका सूर्य देवता है, वोह रोग देता है; भग णका चन्द्रमा देवता है, वोह निर्मल यश देता है; नगणक स्वर्ग देवता है, वोह सुख देता है इस उक्तप्रकारसें पण्डि महोदय गणोंका फल वर्णन करते हैं ॥ १ ॥

## गणदेवतारूपादिज्ञापक यन्त्र.

| संख्या | गणनाम | रूप | देवता | फल | मित्रादि | शुभाशुभ |
|---|---|---|---|---|---|---|
| १ | मगणः | SSS | पृथ्वी | लक्ष्मी | मित्र | शुभ |
| २ | यगण | ISS | जल | आयु | दास | शुभ |
| ३ | रगण | SIS | अग्नि | दाह | शत्रु | अशुभ |
| ४ | सगण | IIS | पवन | परदेश | शत्रु | अशुभ |
| ५ | तगण | SSI | आकाश | शून्य | उदास | सम |
| ६ | जगण | ISI | सूर्य | रोग | उदास | अशुभ |
| ७ | भगण | SII | चन्द्र | यश | दास | शुभ |
| ८ | नगण | III | स्वर्ग | सुख | मित्र | शुभ |